The Collection of Hindu Law Texts.

Vol. XVII.

THE

# SAMAYA OR KÂLA MAYÛKHA

(*Sanskrit Text.*)

A TREATISE ON

THE CALENDAR

BY

BHAṬṬA NÎLAKANṬHA.

EDITED BY

J. R. GHARPURE, B.A., LL.B., (Honours-in-Law)

Pleader, High Court,

*Principal Law College, Poona*

*First Edition.*



1927.

धर्मशास्त्रग्रन्थमाला ( ग्रन्थाङ्कः १७ )

॥ श्रीः ॥

भट्टनीलकण्ठकृतभगवन्तभास्करे

# समयमयूखः

## ( तृतीयः )

---

स च

जगन्नाथ रघुनाथ घारपुरे, बी. ए., एलएल. बी.,
हायकोर्ट वकील, मुंबई,

पुण्यपत्तनस्थव्यवहाराश्रमे मुख्याध्यापकः

इत्यनेन संशोधितः प्रकाशितश्च ।

---

प्रथमावृत्तिः

---

शकाब्दाः १८४८, क्रिस्ताब्दाः १९२७.

---

# उपोद्घातः ।

---

धर्मशास्त्रग्रन्थमालाया अयं सप्तदशमो ग्रन्थोऽधुना प्रकाशं नीयते । भट्टनीलकंठोद्भूत-भगवन्तभास्कराख्यधर्मशास्त्रप्रबन्धे द्वादश मयूखाः 'संस्काराचारकाला' इत्यादि श्लोके दर्शिताः। तेषां तृतीयोऽयं कालनामा समयमयूखो वा । तत्राद्यः संस्कारमयूखो नीलकंठभट्टपुत्रः शंकरभट्टो रचितवान् । आचाराद्येकादशमयूखास्तु भट्टनीलकंठेन स्वयमेव रचिता इत्यत्र विशेषः ।

भाट्टवंशविस्तारस्तथा भट्टनीलकण्ठस्य कालदेशादिविचारोऽस्मद्विरचितव्यवहारमयूखस्याङ्ग्ल-भाषान्तरेऽस्या एव मालायाश्चतुर्दशमे विस्तरतः सावकाशश्च कृतः । सैव संक्षेपतो नीतिव्यव-हाराचारोत्सर्गप्रतिष्ठादिकेषुचिन्मयूखेषु दर्शितो भाट्टवंशवृक्षश्च इत्यस्तत्तत्स्थलेष्वालोचनीय इति नात्र उद्भावितः ।

अत्र यानि पुस्तकानि यैश्च सुमनस्कतया प्रेषितानि तेषां नामादीनि संज्ञाश्च प्रकाश्यन्ते। तद्यथा

अ—डेक्कनकॉलेजसंग्रहात्प्राप्तं १८७५-७६।३७२ इत्यनुक्रमांकेन चिह्नितम् ।

ब— ,, ,, १८८४-८७।३०० ,, ,,

क— ,, ,, १८८२-८३।१२३ ,, ,,

घ— ,, ,, १८७९-८०।६१ ,, ,,

ध— ,, ,, विश्रामबाग १।१३२ ,, ,,

इ—आनन्दाश्रमसंग्रहादानीतम् ३७१० ,, ,,

ड—सत्यपुरवासिश्रीबालाचार्यगजेन्द्रगडकर इत्येतैः प्रेषितं । १७।१० ( माटे इत्येतेषां )

न— ,, ,, ,, ११।६ ,, ,,

क्ष—फर्ग्युसनकॉलेजमंडलीकविभागात्प्राप्तम् ।

य—श्रीमत्सरदारबिवलकर इत्येतेषां संग्रहात्प्राप्तम् । १७० ,, ,,

द— ,, मेहेंदळे ,, ,, ,, ,,

प—मोहमय्यां रॉयल एशिआटिकसोसाइटीतः श्री भाऊदाजी संग्रहात् (श्री भिकंभट पुराणिक इत्येतेषां ) प्राप्तम् ।

फ— ,, ,, १२५ क्रमांकितम् ,,

भ— ,, ,, १९ ,, ,,

ख—राजापुरस्थसंस्कृतपाठशालातः प्राप्तम् ।

श—श्री गुजरातीमुद्रणालये मोहमय्यां मुद्रितं ।

परमुपकृतं नो येभ्यः सकाशादेतानि प्राप्तानीति शम् ।

जगन्नाथ रघुनाथ घारपुरे.

# उपोद्घातः।

धर्मशास्त्रग्रन्थमालाया अयं सप्तदशमो ग्रन्थोऽधुना प्रकाशं नीयते । भट्टनीलकंठोद्धृत-भगवन्तभास्कराख्यधर्मशास्त्रप्रबन्धे द्वादश मयूखाः 'संस्काराचारकाला' इत्यादि श्लोके दर्शिताः। तेषां तृतीयोऽयं कालनामा समयमयूखो वा । तत्रायः संस्कारमयूखो नीलकंठभट्टपुत्रः शंकरभट्टो रचितवान् । आचारायेकादशमयूखास्तु भट्टनीलकंठेन स्वयमेव रचिता इत्यत्र विशेषः ।

भाट्टवंशविस्तारस्तथा भट्टनीलकण्ठस्य कालदेशादिविचारोऽस्माभिर्विरचितव्यवहारमयूखस्यांग्ल-भाषान्तरेऽस्या एव मालायाश्चतुर्दशमे विस्तरतः सावकाशश्च कृतः । सैव संक्षेपतो नीतिव्यव-हाराचारोत्सर्गप्रतिष्ठादिकेषुचिन्मयूखेषु दर्शितो भाट्टवंशवृक्षश्च दत्तस्तत्तत्स्थलेष्वालोचनीय इति नात्र उद्भावितः ।

अत्र यानि पुस्तकानि यैश्च सुमनस्कतया प्रेषितानि तेषां नामादीनि संज्ञाश्च प्रकाश्यन्ते । तद्यथा

अ—डेक्कनकॉलेजसंग्रहात्प्राप्तं १८७५–७६।३७२ इत्यनुक्रमांकेन चिह्नितम् ।
ब— ,, ,, १८८४–८७।३०० ,, ,,
क— ,, ,, १८८२–८३।१२३ ,, ,,
घ— ,, ,, १८७९–८०।६१ ,, ,,
ध— ,, ,, विश्रामबाग १।१३२ ,, ,,
इ—आनन्दाश्रमसंग्रहादानीतम् ३७१० ,, ,,
ड—सत्पुरवासिश्रीबालाचार्यगजेन्द्रगडकर इत्येतैः प्रेषितं । १७।१० ( माटे इत्येतेषां )
न— ,, ,, ,, १९१६ ,, ,,
क्ष—फार्गुसनकॉलेजमंडलीकविभागात्प्राप्तम् ।
य—श्रीमत्सरदारबिवलकर इत्येतेषां संग्रहात्प्राप्तम् । १७० ,, ,,
द— ,, मेहेंदले ,, ,, ,, ,,
प—मोहमय्यां रॉयल एशिआटिकसोसाइटीतः श्री भाऊदाजी संग्रहात् ( श्री भिकंभट पुराणिक इत्येतेषां ) प्राप्तम् ।
फ— ,, ,, १२४ क्रमांकितम् ,,
म— ,, ,, १९ ,, ,,
ख—राजापुरस्थसंस्कृतपाठशालातः प्राप्तम् ।
श—श्री गुजरार्थीमुद्रणालये मोहमय्यां मुद्रितं ।

परमुपकृतं नो येभ्यः सकाशादेतानि प्राप्तानीति शम् ।

जगन्नाथ रघुनाथ घारपुरे.

# समयमयूखान्तर्गतविषयानुक्रमणिका ।

॥ श्री ॥

भट्ट नीलकंठकृते भगवंतभास्करे

# अथ समयमयूखः प्रारंभः ।

---

### मंगलाचरणम् ।

॥ श्रीगणेशाय नमः ॥ यो लीलया सतनुतेऽत्रै विश्वं तत्पालयत्यात्मनि विश्वरूपे ।
रूप्यं नयत्याशु च पूर्णरूपं शिवं तनोत्वाशु रविर्ममाशौ ॥ १ ॥
जज्ञे पितामहतनोः खलु कश्यपो यस्तस्मादजायत मुनिस्तु विभाण्डकाख्यः ।
पुनरिप सुरगुरुसमानकृष्यशृङ्गस्तस्यान्वयेऽप्यजनि शृङ्गिवराभिधानः ॥ २ ॥
तस्मिन्वंशे महति वितते सङ्गराख्ये नृपाणां राजा कर्णः समजनि यथा सागरे शीतरश्मिः ।
कीर्त्या यस्य प्रथिततरया श्रोत्रजातेऽभिपूर्वे कर्णस्यापि प्रथिततकथा नावकाशं लभन्ते ॥ ३ ॥
विशोकाख्यदेवस्ततस्तत्सुतोऽभूद्विशोकीकृता येन सर्वा धरित्री ।
ततोऽप्यास राजा सुतोऽभूद्यशस्यो रयेणैव सर्वाहितत्र प्रसिद्धः ॥ ४ ॥
बभूवाथ वैराटरायस्ततोऽभून्नृपो मेदिनीवल्लभो मौद्गराजः ।
नरमल्लदेवस्ततो मन्युदेवस्ततोऽभून्नृपश्चन्द्रपालाभिधानः ॥ ५ ॥
शिवगणाख्यनृपः समनन्तरो शिवगणाख्यपुरं प्रचकार यः ।
शिवगणेन समं सकलैर्गुणैः शिवशिवप्रथमो गणनासु यः ॥ ६ ॥
रोलिचन्द्र इति तत्तनयोऽभूद्धर्मसेननृपतिस्तमथानु ।
लोकपो नरहरिर्नृपराजो रामचन्द्र इति तत्तनुजातः ॥ ७ ॥
यशोदेवस्ततो जातस्ताराचन्द्रनृपस्ततः । चक्रसेनस्ततो राजा राजसेननृपो यतः ॥ ८ ॥
ततोऽप्यभूद्भूपतिसाहिदेवः स्वकीर्तिभिर्निर्जितदुग्धसिन्धुः ।
अभूत्ततः श्रीभगवन्तदेवः सदैवभाग्योदयवान्क्षितीशः ॥ ९ ॥
यद्दानद्रविणाद्विनिर्जितवपुः रत्नाकरो लज्जया दूरे स्तब्ध इवावृतो निविशते नो यत्र पुंसां गतिः ।
किंच त्वस्यदरातिवामनयनानेत्राम्बुभिर्वर्द्धितस्तेजोभिर्बडवामुखोत्थहुतभुक्तुल्यः कथं नो भवेत् ॥ १० ॥
आहूतस्तेन राज्ञा विबुधकुलमणिर्दीक्षिणात्यावतंसो
भट्टः श्रीनीलकण्ठः स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीयः ।
आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वान्निबन्धान्
दृष्ट्वा सम्यग्विचार्य त्रिजगति भगवद्भास्करस्तन्यतेऽयम् ॥ ११ ॥ )
श्रुतीः स्मृतीर्वीक्ष्य पुराणजातं तथा निबन्धानपि सन्निबन्धान् ।
श्रीशङ्करस्यात्मजनीलकण्ठस्तिथ्यादिकृत्यं विवृणोति सर्वम् ॥ १२ ॥
प्रतारकैरादृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितम् ।
कैर्नोचिताऽतो नहि तेन काचित्स्वपुण्यहीनाऽपचितिर्न हीयते ॥ १३ ॥

---

अ–पुस्तके प्रथमं पृष्ठं नास्त्येव । १ घबघक–+श्रीरविर्जयति, म–+श्रीलक्ष्मीकेशवाय नमः ।
२ पक्ष–भगवतभास्कराख्ये ग्रन्थेऽस्मिन् शिष्टसमते च तत । समयस्य विधिमयूखः प्रतन्यते नीलकंठेन " ॥
३ बघफयर–त्रि । ४ टय–सु । ५ क–रूप इ–रूप । ६ घ–सु । ७ घ–सौ । ८ अत प्रभृति ११ श्लोकपर्यन्त कस्मिन्नपि हस्तलिखितपुस्तके दृश्यते परन्तु ज्ञा–( गुजराथीमुद्रित ) पुस्तके क–पुस्तकोद्धृत पाठ इति दत्त ।
९ न–पुस्तके अयं श्लोकस्तृतीय इति दत्त । १० ईकम–श्रुति । ११ नम–स्मृति, । इ–स्मृति वाक्य ।
१२ ख–विक्ष्य । १३ रयघ–जात । १४ घ–घातपि । १५ टय–धात् । १६ न–नकै, च–राकै । १७ फमधवरयग क्षित इ–दुर्जितम् । १८ ई–अर्कि तलो सैव हि तेन काचित्, बघकधफयटर उर्नोचिता ।
१९ न–नत्र । २० इ–वपुण्य । २१ बईकधफन–चति, या–चति ।

मघूलनिर्मूलमपि व्यवस्थां विनाहत यद्विषयस्य कैरपि ।
नानौषधैस्तद्गुणिगापणस्थैर्भिषग्वरानुक्तगुणैः समं स्मृतम् ॥ १४ ॥
संस्काराचारकालाः श्राद्धं नीतिर्विवाददाने च ।
अथोत्सर्गः प्रतिष्ठा प्रायश्चित्तं विशुद्धिशान्ती च ॥ १५ ॥ *

५

## तिथिसामान्यनिर्णयः ।

तिथिर्द्वेधा । पूर्णा खण्डा च । तत्राद्या स्कान्दे
" प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः । संपूर्णा इति विख्याता हरिवासरवर्जिताः " ॥
हरिवासर एकादशी । तत्र वेधान्तरं वक्ष्यते । तद्भिन्ना खण्डा । तस्या वेधमाह पैठीनसिः
" पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् । त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः" ॥ इति।
१० अत्र ' पूर्वयोः तिथ्योर्द्वयोत्तरमुत्तरया चोदयात्पूर्वं त्रिमुहूर्तया वेधो विधीयते ' इति केचित् ।
निबन्धॄणां तु सर्वेषां दिनमध्य एव पूर्वोत्तरतिथ्योस्त्रिमुहूर्तयोः प्रवेशे वेधोऽभिमतः । *वक्ष्यमाण-
शिवरहस्यविष्णुधर्मोत्तरादिवाक्यात् । सर्वथाऽहोरात्रद्वयगामिनी तिथिः संदिग्धत्वान्निर्णेया ।
सा चैव कर्माङ्गतया विहितैव । न निषिद्धा । तथा च वृद्धगार्ग्यः " विधिः पूज्यतिथौ तत्र
निषेधः कालमात्रकः " इति । यत्तु दक्षः
१५ " त्रिमुहूर्ता न कर्तव्या या तिथिः क्षयगामिनी । द्विमुहूर्ताऽपि कर्तव्या या तिथिर्वृद्धिगामिनी" ॥ इति।
अत्रापिशब्दस्य पूर्वार्धेऽप्यन्वयात्त्रिमुहूर्तत्यागे द्विमुहूर्तग्रहणे च तात्पर्यम् । किन्तु द्विमुहूर्तस्यानु-
कल्पत्वे । अत एव शिवरहस्येऽपि
" यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्तगा । धर्मकृत्येषु सर्वेषु संपूर्णां तां विदुर्बुधाः " ॥ इति ।
तेन विष्णुधर्मोत्तरे
२० " उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ । द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः " ॥ इति ।
द्विमुहूर्तग्राह्यतोक्तिरनुकल्प एव । उदिते भानौ द्विमुहूर्ता दैवतं । अस्तमिते अस्तं गन्तुमारब्धेऽह्नि
त्रिमुहूर्ता पित्र्यमित्यर्थः । अह्न इत्यन्वयादस्तमित इति आदिकर्मणि क्तः ।
"व्रतोपवासनियमे घटिकैकाऽपि या भवेत् । उदये सा तिथिस्तत्र विपरीता तु पैतृके" इत्यादीनि
पाद्मादिवचनानि तु वैश्वानराधिकरणन्यायेन त्रिमुहूर्तवेधमेव स्तुवन्तीति माधवादयः ।
२५ एकादशीपराणीति तु युक्तम् । अन्यथाऽऽदस्त्वौचित्ये न स्तुत्यर्थः ।
कासुचित्तिथिषु निषेधप्रयोजको वेधः । स्कान्दे

---

१ ई-प्रति । २ कई-धा । ३ ई-त्ता । ४ खक-तानौषधि; टय-नानौषधै । ५ ईघयट-मतम्;
फघ-प्रतम्; क प्रमम् । ६ ई-श्र द्ध ( क ) तिथि । ७ ई-धर्मोत; टयवघफधक-र्मै । ८ फघक-वित्त ।
९ टय-विशुद्धि । १० क-शान्तयः टयघ-शान्तीव; त्र-न्ति च । * एतच्चिन्हान्तर्गतश्लोकाः पक्ष-पुस्तकयोर्न
दृश्यन्ते । ख पुस्तके तु १३, १४, १५ न दृश्यन्ते; त्रपुस्तके तु १४ श्लोकं विनैव । क पुस्तके विवादशब्दस्य
" विवादो व्यवहार इत्यर्थ " इति टिप्पणी दृश्यते । ११ ईन- दुदया । १२ क्ष-द्व । १३ यफटय-पूर्वा;
प-तिथिपूर्वो । १४ घ-त्रा । १५ क्षड-पूर्वया । १६ टयवघघड-चोदयात् । १७ निबंधानां; फ-धनां ।
* एतद्वाक्यं पक्षखपुस्तकेषु न दृश्यते । १८ पक्ष-स्तपि च । १९ क्ष-यक्षः । २० क-द्विमुहूर्तत्यागे । २१
ई- अनुकरणं, टय स्याणुकल्पत्वे; क-कल्पत्वे । एतद्वाक्यं पक्षक पुस्तकेषु न दृश्यते । २२ अपक्षड-शिव-
रहस्ये २३ घन-ततः । २४ धफघटया-त्रा । २५ कघ-न्हि । २६ घशघकरण-दृश्यर्थः ।

" नागो द्वादशनाडीभिर्दिक् पञ्चदशभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् " ॥ इति ।
नागः पञ्चमी । दिग्दशमी । भूतश्चतुर्दशी । इति वेधः । तत्रै. विहिता तिथिर्विभक्तविभागेन षोढा । ' पूर्वेद्युरेव कर्मकालगा परेद्युरेव उभयोः । नोभयोः । उभयोरंशेन । तत्रापि साम्येन वैषम्येण च ' इति । तत्रान्यतरदिने कर्मकालगा चेत्सैव ग्राह्या ।
" यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्"॥ ५
इति गार्ग्योक्तेः । अत एवाहोरात्रसाध्य उपवासादौ याऽहोरात्रगा सैव ग्राह्या । तदभावे त्वन्यतरगा ।
"दिवारात्रिव्रतं यत्र एकमेकतिथौ मतम् । तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती " ॥ इति स्मृतेश्च
वैषम्येण कर्मकालस्पर्शेऽधिका ग्राह्या । उभयोर्नोभयोः साम्येनैकदेशे उभयोरित्येतेषु पक्षेषु निर्णयो निगमे
" युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः । रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा ॥ १०
"प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम् । एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम्" ॥ इति ।
युग्मं द्वितीया । अग्निस्तृतीया । युगं चतुर्थी । भूतं पञ्चमी । षट् षष्ठी । मुनिः सप्तमी । वसुरष्टमी । रन्ध्रं नवमी । रुद्र एकादशी । तिथ्योर्युग्मं द्वितीया तृतीयायुता तृतीया च तद्युतेति ।
एवं चतुर्थीपञ्चम्यादीनां युग्मानि । अत्र दशम्यपि पूर्वविद्धा ग्राह्या ।* तथा च स्कान्दे " दशमी चैव कर्तव्या सदुर्गा द्विजसत्तम " । इति । त्रयोदशी पूर्वविद्धा ग्राह्या । तथा च ब्रह्मवैवर्ते १५
" त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने" ॥ इति ।* यत्तु
" पञ्चदश्यप्यमावास्या कृष्णपक्षे चतुर्दशी । एताः परयुताः पूज्याः पराः पूर्वेण संयुताः " ॥
इति युग्मवाक्यं तदप्येतत्संवाद्येव । यत्तु " प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युता" । इति । यच्च " चतुर्थीसंयुता या च सा तृतीया फलप्रदा । चतुर्थी च तृतीयायां महापुण्यफलप्रदा " ॥ इति
तदेतद्विरुद्धम् । अनयोश्च पक्षभेदेन व्यवस्थोक्ता विष्णुधर्मोत्तरे २०
"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः " ॥ इति
कर्मकालव्याप्तौ तूपक्रमगा
" यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमाना भवेदङ्गं नोज्झितोपक्रमेण तु " ॥
इति वचनात् । अयं च युग्मवाक्यकृतो निर्णयो दैव एव कर्मणि । पित्र्ये तु पूर्वोक्तपक्षेषु
" खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् । खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी" ॥ २५
इति उशनसो वचसा निर्णयः । खर्वः साम्यं । दर्पो वृद्धिः । हिंसा क्षयः । एते च खर्वादयः क्वचित्पूर्वतिथ्यपेक्षया ग्राह्यतिथेरेव । क्वचिद्ग्राह्यामपेक्ष्योत्तरोत्तरतिथेरिति तत्र तत्र वक्ष्यामः । तथा च निगमे
"द्वितीयादिकयुग्मानां पूज्यता नियमादिषु । एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना"॥ इति ।
अत्राद्यमादिपदं तिथ्यन्तराणामुपादानार्थं । द्वितीयं सकलदैवकर्मणां । तृतीयं पार्वणस्य । चतुर्थं ३०
वृद्धिरादौ येषामित्यतद्गुणसंविज्ञानबहुव्रीहिणा सर्वदैवश्राद्धानां मुख्यवृद्धिश्राद्धस्य तिथ्यप्रयुक्त-

---

१ प-वसुभि । २ पक्ष-तत्रा । ३ क-गास्त्रोक्त । ४ दचप-युग्मानि । ५ बफ-युग्मे* एतत् अकभक्षखपटयनईडपुस्तकेषु न दृश्यते । ६ अबघधकरयफभड-शुक्लपक्षे । ७ भई-काल । ८ सर्वलिखितेषु विद्यमाना ९ पस-+तिथेरिति शेषः । १० पध-पेक्षायां । ११ पक्ष यें । १२ घबटयपधफस पार्वणस्य चतुर्थं ।, क्षई-चतुर्थे ।

त्वेन तन्निर्णयानुपयोगात् । वृद्धिपदं स्वनिमित्तकश्राद्धलक्षकम् । पञ्चमं साम्यस्य । 'ह्रास-वृद्ध्यादिचोदना' सर्वदर्शादिवाक्यमित्यर्थः । यत्तु देवलः

"यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया स्नानदानजपादिषु"॥ इति ।

यदपि स्कान्दे

५ "यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः । सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु"॥ इति ।

तत्पूर्वोत्तरग्राह्यत्वसाधकानां युगादिशुक्लकृष्णादिवचसामुपोद्बलकम् । एतदपवादः स्कान्दे

"मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः । व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया ॥

"अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने । जाते च मरणे चैव तत्कालव्यापिनी तिथिः"॥

इति विरुद्धवचोव्यवस्था ।

१० अन्हः सामान्यतो विभागमाह व्यासः

"मुहूर्तत्रितयं प्रातस्तावानेव तु सङ्गवः । मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णोऽपि तादृशः ॥

"सायाह्नस्त्रिमुहूर्तः स्यात्सर्वकर्मबहिष्कृतः"॥ इति । पूर्वाह्णमध्याह्नापराह्ण इति त्रेधा विभागस्य क्वचित् पूर्वाह्णोऽपराह्ण इति द्वेधा विभागस्य च पर्वनिर्णयादौ उपयोगो वक्ष्यते ।

अथैकभक्तम् । देवलः

१५ "दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण तु"॥

दिनार्द्धोत्तरं सामान्यतोऽप्युक्तः कालो मध्याह्नान्तावधिरेव । "मध्याह्नव्यापिनी ग्राह्या एक-भक्तव्रते तिथिः" इति बौधायनोक्तेः । अत्र पूर्वोक्तपक्षेषु उत्तरदिने एव कर्मकालव्याप्तौ अधिकस्पर्शे चोत्तराऽन्यथा पूर्वैवेति माधवादयः ।

अथ नक्तम् । व्यासः

२० "त्रिमुहूर्तः प्रदोषः स्याद्भानावस्तंगते सति । नक्तं तत्र प्रकुर्वीत इति शास्त्रस्य निश्चयः"॥

यत्तु "सायंसन्ध्या त्रिघटिका ह्यस्तादुपरि भास्वतः" । इति स्कान्दोक्तसन्ध्यायां मार्कण्डेयेन "चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् । आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम्"॥

इति भोजनं निषिद्धं तद्रागप्राप्तं न वैधं नक्तभोजनं । विधिस्पृष्टे निषेधानवकाशात् । एतेन पर्वादि-रात्रिभोजननिषेधोऽप्यत्र प्रत्युक्तः । प्रदोषव्याप्त्यभावे स्कान्दे

२५ "प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते । आत्मनो द्विगुणा छाया मन्दीभवति भास्करे ॥

"तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् ।

"एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम् । कुर्यान्नक्तव्रती नक्तफलं भवति निश्चितम्"॥ इति ।

सौरनक्ते

"त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः । तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनम्"॥

३० स्मृत्यन्तरे विशेषः

"यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम् । सदिवाकरं तु तत्प्रोक्तमन्तिमे घटिकाद्वये"॥ इति ।

इति नक्तनिर्णयः ।

---

१ भ–योगत्वात् । २ प–निमित्तं, पं । ३ प–स्नानदाने । ४ प–पक्षेन्तरदिन । ५ टयई–प्रयुक्तः । ६ प्र–प्य । ७ दवलटयईफकफा–द्विगुणा । ८ घघपटयफकघतभ–नक्तफलं ।

**अथायाचितं** निर्णीयते । तच्च याचितभोजननिषेधरूपमयाचित भोज्य इति व्रतरूपं वा । तस्य च फलमुक्तं माधवीये स्मृत्यन्तरे "अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात्" ॥ इति । अत्र विशेषवचनाभावादुपवासवन्निर्णय इति केचित् । तन्न
"एकभक्तायाचितयोर्या त्रिंशद्घटिकावधि । सा तिथिः सर्वदा ज्ञेया नक्ते सायाह्नसङ्गता" ॥
इति शार्ङ्गधरीये नारदोक्तेः । अथ प्रसङ्गाद्व्रतविषये किञ्चिदुच्यते । सत्यव्रते ५
"उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक् । सा खण्डा न व्रतानां स्यादारम्भश्च समापनम्" ॥ इति ।
**ब्रह्मयामले**
"दिनभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा । न त्याज्या शुभकार्येषु प्राहुरेवं पुरातना" ॥
**व्रतखण्डेऽग्निपुराणे**
"व्रीहिषष्टिकमुद्गाश्च कलायाः सलिलं पयः । श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः" ॥ तथा १०
"कूष्माण्डालाबुवार्ताकपालङ्क्यज्योत्स्निकास्त्यजेत् । चरुभैक्ष्य सक्तुकणाः शाकं दधि घृतं मधु ॥
"श्यामाकाः शालिनीवाराः यावकं मूलतण्डुलम् । हविष्यं व्रतनक्तादावग्निकार्यादिके हितम् ॥
"मधु मांसं विहायान्यद्व्रते च हितमीरितम्" ।
ज्योत्स्निका कोशातकी । हितं विहितम् । मधु मद्यम् । छन्दोगपरिशिष्टे कात्यायनः
"हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः । माषकोद्रवगौरादीन्सर्वाभावेऽपि वर्जयेत्" ॥ १५
**भविष्योत्तरे**
"हैमन्तिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः । कलायकङ्गुनीवारवास्तूकं हिलमोचिका ॥
"षष्टिका कालशाकं च मूलकं कैमुकेतरत् । कन्दः सैन्धवसामुद्रे लवणे दधिसर्पिषी ॥
"पयोऽनुद्धृतसारं च पनसाम्रहरीतकी । पिप्पली जीरकं चैव नागरङ्गकतिन्तिणी ॥
"कदलीलवलीधात्रीफलान्यगुडमैक्षवम् । अतैलपक्वं मुनयो हविष्याणि प्रचक्षते" ॥ २०
सर्पिः । पयश्चात्र गव्यम् । अतैलपक्वमिथेतत् कथितहविष्याणामेव विशेषणम् । हारीतः
"पतितपाखण्डिनास्तिकादिसंभाषणानृताश्लीलादिकमुपवासादिषु वर्जनीयमिति" । कौर्मे
"बहिर्ग्रामान्त्यजान्सूतिं पतितं च रजस्वलाम् । न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे" ॥
**व्रताधिकारे सुमन्तुः**
"विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहः । निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः" ॥ इति । २५
**विष्णुधर्मेषु**
"असकृज्जलपानं च दिवास्वापं च मैथुनम् । ताम्बूलचर्वणं मांसं वर्जयेद् व्रतवासरे" ॥ इति ।
मांसनिषेधः पारणादिने 'पारणान्तं व्रतं ज्ञेयम्' इत्युक्तेः । न तु प्रधानदिने प्रसक्त्यभावात् ।
"वर्जयेत्पारणे मांसं व्रताहेऽप्यौषधं सदा" इत्युक्तेश्च ।
"अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्" ॥ ३०
इत्यौषधरूपमपि मांसं व्रताहे वर्जयेदित्यर्थः । देवलः

१ ह्–ते, टय–त । २ प–पाखण्डा, क्ष–पाखण्ड त्र । ३ भ–दिवा । ४ टच–श्रुत । ५ म–ते मता । ६ अमन्–कूष्माण्डा । ७ प–पालका, क्ष–पालवा । ८ नड–चैव । प–यवा इतिटिप्पणी ९ यटअनडईपक क्षफभध–हविष्यव्रत । १० बघयरघरखफ–ग्रथपाठे । ११ प–मावेषु । १२ क्षपक–नीवारा । १३ प–मोचिका । १४ कखभप–कथित । * क्षअभपनड–पाठ । १५ क्षपई–विष्णुधर्मोत्तरे । १६ धक्ष–का, बफ–क ।

" असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात्। उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात्" ॥
अशक्तौ तु स एव " अत्यये चाम्बुपानेन नोपवासः प्रणश्यति " ॥ इति।
अत्यये प्राणात्यये। वृद्धवसिष्ठः
" उपवासे तथा श्राद्धे न कुर्याद्दन्तधावनम्। दन्तानां काष्ठसंयोगो हन्ति सप्तकुलानि च " ॥
५ पैठीनसिः
" अलाभे वा निषेधे वा काष्ठानां दन्तधावने। पर्णादिना विशुद्ध्येत जिह्वोल्लेखं सदैव च " ॥ इति।
" अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ। अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् " ॥
विष्णुरहस्ये
" स्मृत्यालोकनगन्धादिस्वादनं परिकीर्तनम्। अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकाङ्क्षणम् ॥
१० " गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम्। व्रतस्थो वर्जयेत्सर्वं यच्चान्यद्बलरागकृत् " ॥ इति।
मैथुनं चाष्टाङ्गम्। तथा च
" स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। संङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च।
" एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः " ॥ इति।
देवलः " स्त्रीणां तु प्रेक्षणात्स्पर्शात्ताभिः संकथनादपि। विपद्यते ब्रह्मचर्यं न दारेष्वृतुसंगमात् " ॥
१५ स्वदारेषु संगमात् इत्यपि क्वचित्पाठः। विष्णुधर्मोत्तरे
" तज्जपस्तत्वनध्यानं तत्कथाश्रवणादिकम्। तदर्चनं च तन्नामकीर्तनं श्रवणादयः ॥
" उपवासवतामेते गुणाः प्रोक्ता मनीषिभिः " ॥ तच्छब्देनोपास्या देवता व्रतदेवता वा।
देवलः " ब्रह्मचर्यमहिंसा च सत्यमामिषवर्जनम्। व्रतेष्वेतानि चत्वारि कर्तव्यानीह सूरिभिः " ॥
आमिषं मांसम्।
२० " आमिषं दृतिपानीयं गोवर्जं क्षीरमामिषम्। मसूरमामिषं सस्ये फले जम्बीरमामिषम् ॥
" आमिषं शुक्तिकाचूर्णमारनालं तथामिषम् " । इति स्मृत्यन्तरोक्तम्। आरनालं काञ्जिकं।
पद्मपुराणे
" अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् " ॥
पयःपानादीनामव्रतघ्नत्वं स्त्रीबालाद्यत्यन्तपीडितव्रतविषयम्।
२५ " सर्वभूतभयं चैव प्रमादो गुरुशासनम्। अव्रतघ्नानि पठ्यन्ते सकृदेतानि शास्त्रतः " ॥
सर्वभूतभयं सर्वेभ्यो भूतेभ्यो भयम्। नैनादौ परान्नभोजननिषेधो देवीपुराणे
" व्रते च तीर्थेऽध्ययने श्राद्धेऽपि च विशेषतः। परान्नभोजनाद्देवि यस्यान्नं तस्य तत्फलम् " ॥ इति।
हेमाद्रौ पाद्मे
" गर्भिणी सूतिकादिश्च कुमारी वाऽथ रोगिणी। यदा शुद्धा तदाऽन्येन कारयेत्प्रयता स्वयम् " ॥ इति।
३० मदनरत्ने छागलेयः
" पूर्वं व्रतं गृहीत्वा यो नाचरेत्काममोहितः। जीवन्भवति चाण्डालो मृतः श्वा चाभिजायते " ॥
गारुडे
" क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि। दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथवा " ॥ इति।

---

१ टयम-न, ख-र्नं। २ झ-ल्य। ३ पक्ष-कीर्तितम्। ४ वकफक्ष-ध्यवसायश्च। ५ प-निवृत्ति, अघवफक्षधटय निर्वृत्ति। ६ वधफ-मनीषिणां, प-णा। ७ वफयट-र्ये। ८ अवकफमखक्षपटय तत्त्वप्यश्रपन, ध-तत्त्वार्यं। ९ पक्षधकफटयढन-ह्ना, ई-उपवासकृते र्थं। १० घवधफयट-पाट। ११ अकटयखक्षफमवघर्ड-अष्टे। १२ टयवफघ-औषधम्। १३ धयटवयफक्ष-पाठ।

प्रायश्चित्तोत्तरमतिक्रान्तानुष्ठानं कार्यम् । " प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् " ॥ इति वायुपुराणोक्तेः ।

अथ प्रतिपदमारभ्य क्रमेण सर्वतिथीनां निर्णयस्तत्कृत्यं चोच्यते । तत्रादौ प्रतिपन्निर्णीयते। तत्र प्रतिपदपराह्णव्यापिनी चेत् शुक्लपक्षे पूर्वा ग्राह्या ' प्रतिपद्यमावास्या ' इति युग्मवाक्यात् । मदनरत्ने स्कान्देऽपि ' प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी ' इति । दीपिकाऽपि ' शुक्ला स्यात्प्रतिपत्तिथिः प्रथमतश्चेत्सा पराह्णे भवेत् ' इति । तदभावे तूक्तं माधवेन ' तदभावे तु सायाह्नव्यापिनी परिगृह्यते ' इति । कृष्णपक्षे परा ग्राह्या । तदुक्तं दीपिकायाम् " कृष्णा तूत्तरतोऽखिलेति " । अथ चैत्रकृष्णप्रतिपत्कृत्यं भविष्योत्तरे

" चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा । या तस्यां श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः ॥

" न तस्य दुरितं किञ्चिन्नाधयो व्याधयो नृप " । १०

तथा "कृत्वा चावश्यकार्याणि संतर्प्य पितृदेवताः । वन्दयेद्धोलिकाभूतिं सर्वदुष्टोपशान्तये"॥ मन्त्रः

" वन्दितासि सुरेन्द्रेण ब्रह्मणा शङ्करेण च । अतस्त्वं पाहि नो देवि भूते भूतिप्रदा भव "॥ इति ।

पुराणसमुच्चयेऽपि " वृत्ते तुषारसमये सितपञ्चदश्यां । प्रातर्वसन्तसमये समुपस्थिते च ॥

" संप्राश्य चूतकुसुमं सह चन्दनेन । सत्यं हि पार्थ पुरुषोऽथ समाः सुखी स्यात् " ॥

पञ्चदश्यामतीतायां प्रातर्भक्षयेदित्यर्थः । १५

" ये पिबन्ति वसन्तादौ चूतपुष्पं सचन्दनम् । सत्यं तत्स्यस्य कामस्य पूजनं क्रियते जनैः " ॥

इति भविष्योत्तरात् । वसन्तादौ चैत्रप्रतिपदि । मन्त्रः

" चूतमग्र्यं वसन्तस्य माकन्द कुसुमं तव । सचन्दनं पिबाम्यद्य सर्वकामार्थसिद्धये " ॥ भविष्ये

" ततः प्रातर्द्वितीयायां पुत्रमित्रादिसंयुतः । नृपतिर्विततेदेशे वितानवरशोभिते ॥

" उपविश्यासने रम्ये पौरजानपदैः सह । सिन्दूरकुङ्कुमैः क्षोदपट्टवासैः सचन्दनैः ॥ २०

" विकीर्य लोकांस्ताम्बूलैः संमान्य च पृथक् पृथक् । नृत्यगीतविनोदैश्च कुर्यात्काममहोत्सवम् ॥

" एवं कुर्वन्नवाप्नोति यावत्संवत्सरं सुखम् " इति । इदं तु पूर्वविद्धायामामेव ।

" वत्सरादौ वसन्तादौ बलिराज्ये तथैव च । पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः " ॥

इति वृद्धवसिष्ठवाक्यात् । चैत्रशुक्लप्रतिपदपि वत्सरारम्भे उदयव्यापिनी ग्राह्या । तदुक्तं माधवीये ब्राह्मे २५

" चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि । शुक्लपक्षे समग्रं तु तदा सूर्योदये सति " ॥ इति ।

दिनद्वये उदयव्याप्तावव्याप्तौ वा पूर्वैव पूर्वोक्तवृद्धवसिष्ठवाक्यात् ।

तत्र तैलाभ्यङ्ग उक्तस्तेनैव

" वत्सरादौ वसन्तादौ बलिराज्ये तथैव च । तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते " ॥ इति ।

अत्र शकादिश्रवणमुक्तं ज्योतिःशास्त्रे " शकवत्सरभूपमन्त्रिणां रसधान्येश्वरमेघपतीनाम् । ३०

"श्रवणात्पठनाच्च वै नृणां शुभता यात्यशुभं सह श्रिया" ॥ इति ।

चैत्रस्य मलमासत्वे तैलाभ्यङ्गशकश्रवणादि शुद्ध एव कार्यम् । यद्यपि वत्सरवसन्तयोः प्रवृत्तिर्जाता तथापि तत्प्रयुक्तंकृत्यम्

---

१ अक्षप-चैत्रप्रतिपत्कृत्यं । २ धूलिं-इति सर्वपाठ । ३ बकभपघधअनडई-विभूते भूतिदा भव । ४ फव-न । ५ फटयधवघ-चन्दनेन । ६ ईडपक्ष-समा, फटयअवघघ-समा, म-समं । ७ कपह-चूतः, धट्य-तत्स्यं । ८ प-रौरवं नरकं व्रजेत् । ९ कट्य-धान्येश । १० फवटय-तु ।

" षष्ठ्या तु दिवसैर्मासः कथितो बादरायणेः । पूर्वमर्द्धं परित्यज्य कर्त्तव्या चोत्तरे क्रिया " ॥
इति वचनादुत्क्रृत्योत्तर एव कार्यम् । नवरात्रारामनवम्यादिवत् । तथाऽत्र विशेषो भविष्ये
" अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे । पुण्येऽह्नि विप्रकथिते प्रपादानं समारभेत् "॥ इति ।
" ततश्चोत्सर्जयेद्विद्वान्मन्त्रेणानेन मानवः ।
५ " प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता । अस्याः प्रदानात्पितरस्तृप्यन्तु हि पितामहाः ॥
"अनिवार्यं ततो देयं जलं मासचतुष्टयम् ॥
" प्रपां दातुमशक्तेन विशेषाद्धर्ममीप्सुना । प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः ॥
" ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः " । तत्र मन्त्रः
" एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः । अस्य प्रदानात्सकला मम सन्तु मनोरथाः ॥
१० " अनेन विधिना यस्तु धर्मकुम्भं प्रयच्छति । प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः " ॥ इति ।
ज्येष्ठशुक्लप्रतिपदि दशहरारम्भः । काशीखण्डे
" ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम् । दशाश्वमेधिके स्नात्वा मुच्यते सर्वपातकैः ॥
" एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः । आ शुक्लपक्षदशमीं प्रतिजन्माघमुत्सृजेत् " ॥ इति ।
अथाश्विनशुक्लप्रतिपदि नवरात्रारम्भः । तदुक्तं हेमाद्रौ धौम्येन
१५ " आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम् । प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् " ॥
तत्र पूर्वाह्णव्यापिनी ग्राह्या
" आश्विनस्य सिते पक्षे नवरात्रमुपोषितः । सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम् " ॥
इति देवीपुराणे तस्य कर्मकालतोक्तेः । " कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः " ।
इत्यनेन कर्मकालव्यापिन्यामेव कर्त्तव्यत्वोक्तेः । न चात्रोपवासानुरोधेन निर्णयः । तस्य नवरात्र-
२० मुपोषितः पूजयेत् इत्यादिदेवीपुराणादौ ' नक्तानि निकृन्तति स्नाति ' इत्यादिवत्फलसंस्कारत्वेन
पूजाङ्गत्वावगमात् । अतः प्रधानभूतपूजाकालपूर्वाह्णव्यापित्वेनैव निर्णयः । पूजायास्तु प्राधान्यं
फलसंबन्धात् । स च स्कान्दे
" आश्विने मासि मेघान्ते महिषासुरमर्दिनीम् । देवीं संपूजयित्वा ये अर्द्धरात्रेऽष्टमीषु च ॥
" क्रीडन्ति विविधैर्भोगैर्देवलोके सुदुर्लभे । नाधयो व्याधयस्तेषां न च शत्रुभयं भवेत् " ॥ इति ।
२५ × कालिकापुराणे
" कृत्वैवं परमामायुर्निर्वृत्तिं त्रिदिवौकसः । एवमन्यैरपि सदा देव्याः कार्यं प्रपूजनम् ॥
" विभूतिमतुलां लब्धुं चतुर्वर्गप्रदायकम् " । पूजयेदित्यधिकृत्य भविष्योत्तरेऽपि
" भवानीतुष्टये पार्थ संवत्सरसुखाय च । भूतप्रेतपिशाचानां नाशाय चोत्सवाय च " ॥ इति ।
अकरणे प्रत्यवायोऽपि कालिकापुराणे
३० " यो मोहाद्यवाऽऽलस्याद्देवीं दुर्गां महोत्सवे । न पूजयति दुष्टात्मा द्वेषाद्वाऽप्यथ भैरव ॥
" क्रुद्धा भगवती तस्य कामानिष्टानि हन्ति वै " । तथा देवीपुराणे
"पूजयित्वाऽऽश्विने मासि विशोको जायते नरः । वर्षेवर्षे विधातव्यं स्थापनं च विसर्जनम्"॥ इति ।
" देशभंगो भवेत्तत्र दुर्भिक्षं क्वापि जायते । नंदायां दर्शयुक्तायां यत्र स्यात्तत्र पूजनम् ॥

---

१ पअक्ष-वचनेन पूर्वमायस्यकृत्यमोत्तरमाचे कर्तव्यत्वविधानात् । २ अखपघकलक्षईमन-स्रजते, ङघ-सृज्यते टय-ने । ३ बफ-विधान् । ४ क-मानव । ५ " सामान्यात् ' इति सर्वपाठ । कहा-पाठो-द्धृत । ६ प-र्वा । ७ पनहा-व्योचे, क्ष-सोकचे । ८ प-तु । × वघटयघपु-पाठः ।

" तस्माद्भद्रान्विता नदा नवरात्रे प्रशस्यते । आश्विने मासि भद्रर्क्षे कर्तव्या शुक्लपक्षगा ॥
" प्रतिपत्त्रिमुहूर्त्ताऽपि पुत्रपौत्रप्रवर्द्धिनी । धनवृद्धिकरी पुंसां सर्वसौख्यकरी तथा ॥
" अतोऽन्यथा न कर्तव्या नवरात्रव्रते मम ।
" योऽन्यथा कुरुते मोहाद्रागात्पूजाविधौ मम । तस्य राष्ट्रे प्रजानाशं करिष्यामि न संशयः ॥
" साऽमयासहिता ग्राह्या न कदाचिद्विचक्षणे । सर्वक्षयकरी यस्मात्तस्मात्तां परिवर्जयेत् ॥ ५
" अमावास्यायुता कुर्याद्यदि कश्चित्कदाचन । राज्यनाशमवाप्नोति पञ्चत्वं चाधिगच्छति ॥
" पूर्वविद्धा तु या शुक्ला भवेत्प्रतिपदाश्विनी । नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता "॥ तथा
" अमायुक्ता न कर्तव्या प्रतिपत्पूजने मम । मुहूर्तमात्रकर्तव्या द्वितीयादिगुणान्विता " ॥
यत्तु गोविन्दार्णवे देवीपुराणे
" शरत्काले महापूजा क्रियते या च वार्षिकी । सा कार्योदयगामिन्या न तिथेस्तत्र युग्मता " ॥ इति । १०
तत्रोदयगामित्वमपि प्रायः पूर्वाह्णव्यापित्व एव भवतीति न विरोधाशङ्का । युग्मता युग्मवाक्यानुरोधेन निर्णय इत्यर्थः । वार्षिकीत्यनेन संवत्सरस्यादौ चैत्रशुक्लप्रतिपदुपक्रम्य नवम्यन्ता पूजाऽभिधीयते । ततश्च शरद्वसन्तयोस्तुल्य एव दुर्गोत्सवः कार्यः । यानि तु
" यो मां पूजयते नित्यं द्वितीयादिगुणान्विताम् । प्रतिपच्छारदे शाश्वत् सोऽश्नुते सुखमव्ययम् ॥
" यदि कुर्याद्दमायुक्तं प्रतिपत्स्थापनं मम । तस्य शापायुतं दत्वा भस्मशेषं करोम्यहम् ॥ १५
" आग्रहात्कुरुते यस्तु कलशस्थापनं मम । तस्य संपद्विनाशः स्याज्ज्येष्ठः पुत्रो विनश्यति " ॥
तथा
" न दर्शकलया युक्ता प्रतिपच्चण्डिकार्चने । उदये द्विमुहूर्ताऽपि ग्राह्या सोदयगामिनी ॥
" या चाऽऽश्वयुजि मासे स्यात्प्रतिपद्भद्रयाऽन्विता । शुद्धा समाचन तस्यां शतयज्ञफलप्रदम् " ॥
इत्यमायोगनिषेधकानि । यानि च २०
" द्वितीयाशेषसंयुक्ता प्रतिपच्चण्डिकार्चने । मोहादयोपदेशाद्वा कृतं पुत्रविनाशकम् ॥
" आरम्भे नवरात्रस्य द्वितीया त्रुटिसंयुता । न केवलं तिथिं हन्ति वेधात्सा पुत्रसंपदम् " ॥
इत्यादीनि द्वितीयायोगनिषेधकानि तान्युभयविधान्यपि सर्वाणि निर्मूलानि । समूलत्वेऽपि परस्परसत्प्रतिपक्षत्वान्निर्णायकानि । चन्द्रप्रकाशे
" प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् । प्रातः प्रातश्च संपूज्य प्रातरेव विसर्जयेत् " ॥ २५
इत्युक्तम् । सति संभवे प्रतिपद आद्य नाडीषोडशकं त्यक्त्वा कलशं स्थापयेत् ।
" आद्याः षोडश नाडीस्तु लब्ध्वा यः कुरुते नरः । कलशस्थापनं तत्र ह्यरिष्टं जायते ध्रुवम् " ॥
इति देवीपुराणवचनात् । कलशस्थापने वैधृतिचित्रादियोगनिषेधकानि वचनानि तानि निर्मूलानि ।
यथा
" भद्रायुता चेत्प्रतिपत्तु लभ्यते विरुद्धयोगैरपि संद्भुता सती । ३
"सैवापराह्णे विबुधैर्विधेया स्त्रीपुत्रराज्यादिविवृद्धिहेतु " ॥ इति । कलशस्थापनं तु दिवैव कार्यम् ।
न रात्रौ । तदुक्तं मात्स्ये " न रात्रौ स्थापनं कार्यं न च कुम्भाभिषेचनम् " । इति ।
अत्र त्रिरात्रमप्युक्तं हेमाद्रौ धौम्येन " त्रिरात्रं वाऽपि कर्तव्यं सप्तम्यादि यथाक्रमम्" ॥ इति ।

१ ग्टघअववइई–यत्तु देवीपुराणे । २ प–प्रतिमा । ३ ख–या टय–यो । ४ क–रात्रौभिषेचनं
५ खङक–च पि घ–प्यपि ।

* अत्र दिनत्रयं न सावनं किंतु चान्द्रमेव । तथा च भविष्ये

" व्रती प्रपूजयेद्देवीं सप्तम्यादि दिनत्रये । ह्रास्या चतुरहोभिर्वा ह्रासवृद्धिवशात्तथा " ॥ इति ।

अथ विस्तरेण नवरात्रकृत्यं देवीपुराणे

५　" कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम् । अयाची त्वथवैकाशी नक्ताशी वाऽथ वाय्वदः ॥

" प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः । जपहोमसमायुक्तः कन्यकां भोजयेन्मुदा " ॥

शिवश्च शिवा च शिवौ तयोः पूजकः । नन्दा च प्रतिपदेव । प्रथमोपस्थितत्वात् । भविष्ये

" त्रिरात्रं चापि कर्तव्यं सप्तम्यादि यथाक्रमम् " । तत्र प्रतिपदि पूर्वाह्णे तिलतैलेन स्नातो यजमानो गणपतिं सम्पूज्य देशकालौ निर्दिश्य 'नवमीं पर्यन्तमुपवासाद्यन्यतरनियमोपेतो

१०　दुर्गापूजनममुकफलकामः करिष्ये ' इति सकल्पयेत् । ततः कदलीस्तम्भवस्त्रादिमण्डिते गृहे चतुरस्रचतुर्हस्तवेदिकोपरि सर्वतोभद्रादिमण्डलं विधाय तत्र ' मही द्यौः ' इत्यादिवरुणपूजान्तं कलशस्थापनं कुर्यात् । सौवर्णादिप्रतिमापूजार्थम् ' पूज्या मण्डलकुम्भस्था ' इति देवीपुराणात् । मृन्मयादिका तु कलशस्य पश्चाद्रासने स्थाप्या । वदिकोणेष्वपि चत्वारः कलशाः स्थाप्याः

१५　" चतुरः कलशान्यस्तु दद्याद्देवगृहे नरः । चतुः समुद्रवलया स तु भुङ्क्ते वसुन्धराम् " ॥

इति विष्णुधर्मोत्तरात् । प्रतिमा च हेमादिमयी । देवीपुराणे

" हेमराजतमृद्धातुशैलाचित्रार्पिताऽपि वा । खड्गे शूलेऽर्चिता देवी सर्वकामफलप्रदा ॥

"मृन्मयीं प्रतिमां कृत्वा बिल्वे वा यस्तु पूजयेत् । आत्मवित्तानुसारेण स लभेन्मौलिकं फलम्"॥ इति

प्रतिमालक्षणं मत्स्यपुराणे

२०　" जटाजूटसमायुक्तामर्धेन्दुकृतलक्षणाम् । लोचनत्रयसंयुक्तां पद्मेन्दुसदृशाननाम् ॥

" अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् । नवयौवनसम्पन्नां सर्वाभरणभूषिताम् ॥

" सुचारुदशनां तद्वत्पीनोन्नतपयोधराम् । त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् ॥

" त्रिशूलं दक्षिणे दद्यात्खड्गं चक्रं तथैव च । तीक्ष्णं बाणं तथा शक्तिं वामतोऽपि निवेशयेत् ॥

" खेटकं पूर्णचापं च पाशमङ्कुशमूर्ध्वजम् । घण्टां वा परशुं वाऽपि वामतः सन्निवेशयेत् ॥

२५　" अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् । शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् ॥

" हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् । रक्तरक्तीकृताङ्गं च रक्तविस्फारितेक्षणम् ॥

" वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् । सपाशवामहस्तेन धृतकेशं च दुर्गया ॥

" वमद्रुधिरवक्त्रं च देव्याः सिंहं प्रदर्शयेत् । देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् ॥

" किंचिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि । स्तूयमानं च तद्रूपममरैः सन्निवेशयेत् " ॥ इति ।

३०　ध्यानमप्येवम्

---

* कक्ष-पाठ । १ अवघधकपुभक्षखदटप-हेम-रजत । २ प-तृण । ३ क्षवघङ्गक-मौक्तिक । ४ प-घोत्तराम् । ५ अवघटय-वदना प दशना । ६ घअव्रघपुअखकई-कम दध । टय गदाधर क-समादध । ७ अघटयधभखव-निर्योषत कफच-त क्षप-विचिन्तयत् । ८ पक्ष-मवच । ९ कघफखव-निर्यदन्त घटय-तिर्य—प-तिर्यग्या अघ-तिर्यदत्र क्ष-गात्र । १० प-रक्तवस्त्र वृतांग च । ११ घक-कुटिलानना, अटपक्षधपध-नाम् ।

" एहि दुर्गे महामाये रक्षार्थं मम सर्वदा । आवाहयाम्यहं देवि सर्वकामार्थसिद्धये ॥
" अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु । रक्षां कुरु सदा भद्रे विश्वेश्वरि नमोऽस्तु ते" ॥
इत्यावाहनम् 'भगवति दुर्गे इहागच्छ इह तिष्ठ इह संनिधेहि स्थिरा भव सुप्रसन्ना भव' इत्यपि पठन्ति । पूजादिमन्त्रश्च ' कुर्याद्देव्याश्च मन्त्रेण ' इत्यभिधाय
" जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते । ५
" अनेनैव तु मन्त्रेण जपहोमादि कारयेत् " । इति पुराणोक्तेः ।
" तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वदेवान्समाहितः " ॥ इति अग्निपुराणाद्वैदिक आगमिको वा ।
'नाम्ना सर्व समापयेत्' इति साधारणवाक्यात्प्रणवादिचतुर्थ्यन्तनमोन्तनाममन्त्रो वा । स्कान्दे ॥
" दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनि । पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् ॥
" अनेनैव तु मन्त्रेण जपहोमादि कारयेत्" ॥ इत्युक्तम् । छत्रचामरादिभी राजोपचारैः पूजा । १०
तदन्ते प्रणम्य देवीं प्रार्थयेदनेन मन्त्रेण
" महिषघ्नि महामाये चामुण्डे मुण्डमालिनि । द्रव्यमारोग्यविजयं देहि देवि नमः सदा ॥
" भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि । देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा ॥
" सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥
" रूपं देहि यशो देहि भगं भगवति देहि मे । पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे " ॥ इति । १५
ततो दुर्गामन्त्रं वैदिकमागमिकं वा जपेत् । " दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः समाहित " इति देवीपुराणात् । यद्वा
" माहात्म्यं भगवत्यास्तु पुराणादिषु कीर्तितम् । पठेद्वा शृणुयाद्वाऽपि सर्वकामसमृद्धये " ॥
तथा " एकोत्तराभिवृद्ध्या तु नवमीं यावदेव हि । चण्डीपाठं जपेच्चैव जापयेद्वा विधानतः " ॥
वाराहीतन्त्रे " सङ्कल्पितस्तोत्रपाठे सङ्ख्यां कृत्वा पठेत्सुधीः " । २०
तत्रैव " चण्डीपाठफलं देवि शृणुष्व गदतो मम । एकावृत्त्यादिपाठानां यथावत्कथयामि ते ॥
" सङ्कल्पपूर्वं संपूज्य न्यस्याङ्गेषु मनूनकृत । पाठाद्बलिप्रदानाच्च सिद्धिमाप्नोति मानवः ॥
" उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः । ग्रहोपशान्त्यै कर्तव्यं पञ्चावृत्तं वरानने ॥
" महाभये समुत्पन्ने सप्तावृत्तं समुच्चरेत् । नवावृत्त्या भवेच्छान्तिर्वाजपेयफलं लभेत् ॥
" राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत् । अर्कावृत्ते काम्यसिद्धिर्वैरहानिश्च जायते ॥ २५
" मन्वावृत्त्याद्रिपुर्वश्यस्तथा स्त्री वश्यतामियात् । सौख्यं पञ्चदशावृत्त्या श्रियमाप्नोति मानवः ॥
" कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः । राज्ञो भीतिविमोक्षाय वैरस्योच्चाटनाय च ॥
" कुर्यात्सप्तदशावृत्तं तथाष्टादशकं प्रिये । महारणविमोक्षाय विंशावृत्तं पठेत्सुधीः ॥
" पञ्चविंशावर्तनात्तु भवेद्बन्धविमोक्षणम् । सङ्कटे समनुप्राप्ते दुश्चिकित्स्यामये तथा ॥
" जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते । वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये ॥ ३०
" तथैव त्रिविधोत्पाते तथा चैवातिपातके । कुर्याद्यत्नाच्छतावृत्तं ततः संपद्यते शुभम् ॥
" श्रेयोवृद्धिः शतावृत्ताद्राज्यवृद्धिस्तथा परा । मनसा चिन्तितं देवि सिद्ध्येदष्टोत्तराच्छतात् ॥
" शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते । सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा ॥
" भुक्त्वा मनोरथान्कामान्नरो मोक्षमवाप्नुयात् ।
" यथाश्वमेधः क्रतूनां देवानां च यथा हरिः । स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः ॥ ३५

१ क्षकघनफभपटयघकम्–देवीपुराणोक्त । २ प–नमोऽन्तेन नाममन्त्रेण । ३ प–महामाये, महादुर्गे । ४ क्ष–सर्वकामार्थसाधके ( भव ) । ५ भकअ–कामांश्च । ६ क–पठेत् । ७ फघभ–वृत्ते । ८ प–नत ।

"अथवा बहुनोक्तेन किमेतेन वरानने । चण्ड्याः शतावृत्तिपाठात्सर्वाः सिद्ध्यन्ति सिद्धयः"॥ इति।
पाठश्च नारायणादीन्नमस्कृत्य कार्यः ।
" नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् " ॥
५ इति वचनात् । जयशब्दार्थश्च भविष्यपुराणे
" अष्टादशपुराणानि रामस्य चरितं तथा । विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥
" कार्ष्णं च पञ्चमो वेदो यन्महाभारतं स्मृतम् । शैवाश्च धर्मा राजेन्द्र मानवोक्ता महीपते ॥
" जयेति नाम एतेषां प्रवदन्ति मनीषिणः " ॥ इति ।
पाठप्रकारश्च मात्स्ये
१० " प्रणवं चाऽऽदितो जप्त्वा स्तोत्रं वा संहितां पठेत् । अन्ते च प्रणवं दद्यादन्यथा विफलं भवेत् ॥
" शुद्धेनानन्यचित्तेन पठितव्यं प्रयत्नतः । न कार्यासक्तमनसा कार्यं स्तोत्रस्य वाचनम् ॥
" आधारे स्थापयित्वा तु पुस्तकं प्रजपेत्सुधीः । हस्तसंस्थापनादेव यस्मादल्पफलं भवेत् ॥
" स्वयं च लिखितं यत्तु कृतिनो लिखितं च यत् । अब्राह्मणेन लिखितं तच्चापि विफलं भवेद्" ॥
कृती लेखकः । तदुपजीवीत्यर्थः ।
१५ " ऋषिच्छन्दादिकं न्यस्य पठेत्स्तोत्रं विचक्षणः । सङ्कल्पिते स्तोत्रपाठे सङ्ख्यां कृत्वा पठेत्सुधीः ॥
" अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन । कृते विरामे मध्ये तु अध्यायादि पठेत्पुनः " ॥
इति । श्रवणं च ब्राह्मणादेव कार्यम्
" ब्राह्मणं वाचकं विन्द्यान्नान्यवर्णजमादरात् । श्रुत्वाऽन्यवर्णजाद्ब्राह्मन् वाचकान्नरकं व्रजेत् " ॥
इति भविष्यत्पुराणात् । यद्यपि देवीपुराणे जपपूजादिवद्धोमोऽपि प्रत्यहमुक्तस्तथापि अष्टम्यां
२० नवम्यामेव वा कार्यः । ब्रह्मपुराणे " तत्राष्टम्यां भद्रकाली"त्युपक्रम्य " होमैर्ब्राह्मणतर्पणैः "
इत्यष्टमीकृत्यमध्ये पाठात् ।
" नवम्यां बलिदानं च कर्तव्यं वै यथाविधि । जपं होमं च विधिवत्कुर्यात्तत्र विभूतये " ॥
इति कालिकापुराणात् । शिष्टाचाराच्च बलिदानमप्यष्टमीनवम्योरेव ।
" पुनः पूजां तथाऽष्टम्यां विशेषेण समाचरेत् ॥
२५ " जागरं च स्वयं कुर्याद्बलिदानं महानिशि । प्रभूतबलिदानं तु नवम्यां विधिवच्चरेत् " ॥
इति कालिकापुराणात् । अत्र यद्यपि शिष्टपरिगृहीतकालिकापुराणादिषु मद्यस्वगात्ररुधिरपशु-
घातादिकमुक्तं तथापि ब्राह्मणस्य न भवति
" मद्यं दत्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते । स्वगात्ररुधिरं दत्वा ब्रह्महत्यामवाप्नुयात् " ॥
इति कालिकापुराण एव निषेधात् । " सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषै"रित्येत-
३० त्प्रकारकसात्त्विकपूजाया भगवद्गीतादिषु ब्राह्मणाधिकारिकताया एवोक्तेः । पशुबलिदानस्य
तु ' विजयार्थं नृपोत्तमः ' इति राजपुरस्कारेणैव विहितत्वाच्च । अतो माषभक्तादिना तेन
बलिदानं कार्यम्
" माषकुम्भमापमांसाद्यैर्देयो दिक्षु बलिर्निशि ।

१ पक्ष–यदैव धर्मे । २ महाअ–जपेत् । ३ खटभ–अधारे । ४ क्ष–पूजयेत् । ५ प–पुस्तकं द्रष्टव्येणेति टिप्पणिर्दृश्यते । ६ टय–लिपितं । ७ वधकटयफनई–विचात् । ८ कटयपक्ष–जपहोमे । ९ प–तथानिशि ।
१० क्ष–कल्याण, न–कुल्याप ।

" कूष्माण्डमिक्षुदण्डश्च मद्य मांसं तथैव च । एते बलिसमा ज्ञेयास्तृप्तौ छागसमा मताः " ॥
इति कालिकापुराणात् ।
अथ कुमारीपूजा । देवीपुराणे । ब्रह्मोवाच
" न तथा तुष्यते शक्र होमदानजपादिना । कुमारीपूजनेनात्र यथा देवी प्रसीदति " ॥
अत्र नवरात्रे । " शुक्लाष्टमीचतुर्दश्योर्नवम्यां च विशेषतः " । इति च प्रसङ्गादन्यत्रापि ५
तद्विधानम् । कुमारीपूजने विशेषो मदनरत्ने स्कान्दे
" एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च । द्विगुणां त्रिगुणां वाऽपि प्रत्येकं नवकं तु वा ॥
" एकवर्षा तु या कन्या पूजार्थं तां विवर्जयेत् । गन्धपुष्पफलादीनां प्रीतिस्तस्या न विद्यते ॥
" द्विवर्षकन्यामारभ्य दशवर्षावधि क्रमात् " ।
यथोक्तालाभे तु देवीपुराणे १०
" विवाहानन्तरं कन्या कन्यात्वमुपजायते । तावत्संपूज्यते कन्या यावत्पुष्पं न दृश्यते " ॥इति।
पूजामन्त्रस्तु स्कान्दे
" मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम् । नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥
' जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि । पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तु ते ॥
" एवमभ्यर्चयेत् कुर्यात्कुमारीणां प्रयत्नतः । कञ्चुकैश्चैव वस्त्रैश्च गन्धपुष्पाक्षतादिभिः ॥ १५
" नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः " ।
अत्रापूज्यकन्यास्वरूपमुक्तं तत्रैव
" हीनाधिकाङ्गीं कुष्ठीं च विनाशिकुलसम्भवाम् । ग्रन्थिस्फुटितसर्वाङ्गीं रक्तपूयव्रणाङ्किताम् ॥
" जात्यन्धां केकरां काणीं कुरूपां तनुरोमशाम् । संत्यजेद्रोगिणीं कन्यां दासीगर्भसमुद्भवाम्" ॥ इति।
विनाशि भर्तृशून्यम् । अन्धेत्य कूर्परजान्वाया । तनुश्चासौ रोमशा चेति कर्मधारयः । २०
देवीगृहे दीपा अहोरात्रं प्रज्वलनीयाः । मत्स्यपुराणे
" गीतवादित्रनिर्घोषं देवतायाग्रे च कारयेत् । घण्टा भवेदशक्तस्य सर्ववाद्यमयी यतः " ॥ इति ।
पूजा च प्रत्यहं त्रिकालं कार्या ' त्रिकालं शिवपूजकः ' इति पूर्वोक्तदेवीपुराणात् ।
ज्योतिःशास्त्रे सप्तम्यां बिल्वशाखापूजोक्ता
" आश्विनस्य सिते पक्षे सुमुहूर्तेन सप्तमी । तस्यां च पत्रिकापूजा कर्तव्या नवनीयकैः ॥ २५
" प्रशस्तां सफलां बिल्वशाखामाहृत्य पूजयेत् " ॥ इति ।
अथ बोधनप्रकारः । तत्कालो लिङ्गपुराणे
" कन्यायां कृष्णपक्षे तु पूजयित्वाऽऽर्द्रभे दिवा । नवम्यां बोधयेद्देवीं महाविभवविस्तरैः " ॥
भविष्ये " षष्ठ्यां बिल्वतरौ बोधं सायंसन्ध्यासु कारयेत् " ।
देवीपुराणे " ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम् " ॥ ३०
' बिल्ववृक्षाय नमः ' इति बिल्वतरुं संपूज्य बिल्ववृक्षे जयन्तीत्यादि च दुर्गे इहागच्छेत्यादिना
दुर्गामावाह्य पूजयित्वा गीतवाद्यघोषपुरस्सरं देवीं विबोधयेत् । मन्त्रस्तु

---

१ टयवअधकफनसथ–मता । २ पक्ष–तथा । ३ टयवधफमभक्षदई–ज्वालनीया । ४ टयम पवक्ष– शत्रौ ध–यत्नतः । ५ ह–रभेदिवा । कखभघर–र्भे दिवा टथ–भे दिवा, टप–र्द्रदिवा, ध–च भे दिवा ६ न–बोध छय–बोध । ७ बफ– दे । ८ ई– विबेतयेत्, टयन–बोधयेत् ।

" रावणस्य वधार्थाय रामस्यानुग्रहाय च । अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा ॥
" इषे मासि सिते पक्षे नवम्यां मार्गयोगतः । श्रीवृक्षे बोधयामि त्वां यावत्पूजां करोम्यहम् "॥ इति ।
षष्ठ्यां तु इष इत्यादेः स्थाने " अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यतः " ॥ इति ।
ततो बिल्वतरोरामन्त्रणम् । मन्त्रस्तु

५ " मेरुमन्दारकैलासहिमवच्छिखरे गिरौ । जातः श्रीफलवृक्ष त्वमम्बिकायाः सदा प्रियः ॥
" श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतन । नेतव्योऽसि मया वृक्ष पूज्यो दुर्गास्वरूपतः " ॥ इति ।
अपरेद्युः पुनरपि संपूज्य कृताञ्जलिः प्रसादयेत्
" बिल्ववृक्ष महाभाग सर्वदा शंकरप्रिय । गृहीत्वा तव शाखां तु दुर्गापूजां करोम्यहम् ॥
" शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया प्रभो " ॥ इति ।

१० ततः फलयुतामपराजितादिग्गतामेकां शाखां छेदयेद्वानस्पत्येन मन्त्रेण । कश्चित्तु ' छिन्धि फट् ॐ हूं फट् स्वाहा ' इति मन्त्रः । ततः शाखां गृह आनीय ' बिल्वशाखायै नमः ' इति पूजयित्वा बिल्वशाखायां मृन्मयप्रतिमायां च देवीमावाहनपुरःसरं पूजयित्वा माषभक्तादिबलिं च दत्वा दोलादिना बिल्वशाखां प्रतिमां च पूजागृहद्वारदेशे स्थापयित्वा माषभक्तादिबलिं दत्वा पूजागृहस्थानि भूतानि ' भूतेभ्यो नमः ' इति गन्धादिभिः संपूज्य

१५ " भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले । ते गृह्णन्तु मया दत्तो बलिरेष प्रसाधितः ॥
" पूजिता गन्धपुष्पाद्यैर्बलिभिस्तर्पितास्तथा । देशादस्माद्विनिःसृत्य पूजां पश्यन्तु मत्कृताम् ॥
" भूतेभ्य एष माषभक्तबलिर्न मम " इति बलिं दत्वा
" अपसर्पन्तु ते भूता ये भूता भूमिपालकाः । भूतानामविरोधेन पूजाकर्म करोम्यहम् " ॥
' फट् ' इति तान्यपसारयेत् ।

२० " स्थितेषु तत्र भूतेषु नैवेद्यं मण्डलं तथा । विलुम्पन्ति महालुब्धा न च गृह्णन्ति देवताः ॥
" तस्माद्यत्नेन कर्तव्यं भूतानामपसारणम् " । इति कालिकापुराणात् । सर्षपांश्च विकिरेत् ।
ततः पुनः शाखायां प्रतिमायां च देवीं संपूज्य गीतवाद्यादिपुरस्सरं पूजागृहं प्रवेश्य
" आनीताऽसि दुर्गे त्वं मृन्मये श्रीफलेऽपि च । स्थिरा नितान्तं भूत्वा मे गृहे त्वं कामदा भव"॥
इति पूजागृहे स्थापयेत् । ततः प्राणप्रतिष्ठां कृत्वा

२५ " आवाहयाम्यहं देवीं मृन्मये श्रीफलेऽपि च । कैलासशिखराद्देवि विन्ध्याद्रेर्हिमपर्वतात् ॥
" आगत्य बिल्वशाखायां चण्डिके कुरु सन्निधिम् " । भगवति दुर्गे इहागच्छ इत्युभयोरावाह्य
" स्थापिताऽसि मया देवि श्रीफले मृन्मयेऽपि च । आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते "॥
भगवति दुर्गे इह तिष्ठ इति स्थापयित्वा
" दुर्गो दुर्गस्वरूपाऽसि सुरतेजोमहाबले । सदाऽऽनन्दकरे देवि प्रसीद मम सिद्धये ॥

३० " एह्येहि भगवत्यम्ब शत्रुक्षयजयप्रदे । भक्तितः पूजयामि त्वां दुर्गे देवि सुरार्चिते ॥
" पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः । पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे ॥
" दुर्गे देवि इहागच्छ सान्निध्यमिह कल्पय । यज्ञभागान्गृहाण त्वं योगिनीकोटिभिः सह " ॥
इति कृताञ्जलिः पठेत् । ततो जयन्तीत्यादिदुर्गायै नमः इदं पाद्यं पुष्पगन्धाक्षतकुङ्कुमदधिदूर्वा-

---

१ पक्षन–इत्यादि । २ प–श्रीफलः । ३ पन–पूजागृहे । ४ प–भुवि संस्थिताः । ५ क्ष–समारभत् । ६ फव–मिताश्चं । ७ अंकटवयखघ–तथा । ८ बफ–भावं । ९ टय–शक्तितः । १० फव–कृताजलिः; टय–कृताञ्जलि ।

कुशतिलबिल्वपत्रसहितजलेनार्घ्यमाचमनीयं पञ्चामृतस्नानीयपुनराचमनीयवस्त्रपुनराचमनीयानुलेपनादि दत्वा ' ॐ दुर्गायै नमः ' इति पुष्पाञ्जलित्रयं दद्यात् । ततः
" अमृतोद्भवं श्रीवृक्षोत्थं शङ्करस्य सदा प्रियम् । बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि " ॥
इति बिल्वपत्रम्
" ब्रह्माविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम् । तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये " ॥　५
इति द्रोणपुष्पं च निवेद्य जयन्ती इत्यादिना पुष्पधूपदीपनैवेद्यपुनराचमनीयताम्बूलानि दत्वा पूजासाद्गुण्यार्थं दक्षिणां दत्वा स्तुतिभिः स्तुत्वा प्रणम्य बद्धाञ्जलिः प्रार्थयेत्
" महिषघ्नि महामाये चामुण्डे मुण्डमालिनि । द्रव्यमारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥
" कुङ्कुमेन समालब्धे चन्दनेन विलेपिते । बिल्वपत्रकृतापीडे दुर्गेऽहं शरणागतः " ॥
' सर्व मङ्गलेति ' ' रूपं देहि ' इति च श्लोकं पठेत् । बलिं च दद्यात् । एवमेव महाष्टम्यामपि　१०
देवीपूजनं विशेषतस्त्वर्द्धरात्रे जागरणं च राज्ञा विजयतुकामोऽर्द्धरात्रे विशेषपूजापूर्वकं बलिं दद्यात् " तदर्धयामिनीशेषे विजयार्थं नृपोत्तमः ॥
" पश्चाद्द् लक्षणोपेतं गन्धधूपस्रगर्चितम् । विधिवत्कालि कालीति जप्त्वा खड्गेन घातयेत् " ॥
इति देवीपुराणात् । पश्चाद्दं महिषमजं वा । तत्रैव शस्त्रादिपूजनं च कुर्यात् । महानवम्यामेवमेव पूजा बलिदानं होमश्च होममन्त्रश्च जयन्ती इत्यादि. । " अनेनैव तु मन्त्रेण जपहोमादि　१५
कारयेत् " इति देवीपुराणात् । होमद्रव्यं च तत्रैवोक्तम् " पूजयेद्विल्वहोमैश्च दधिक्षीरघृतान्विभिः । " इति ॥
केचित्तु[1]'प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पिषा[2]'इति रहस्यवचनात् सप्तशतीस्तवेन प्रतिश्लोकं तिलसर्पिर्मिश्रपायसेन होमं कुर्वन्ति । राज्ञा त्वश्वपीडाशान्तये ब्रह्मपुराणोक्ता रेवन्तपूजाऽपि कार्या । स च वडवारूपायामुत्पन्नः सूर्याद्धुत्पन्नो वाजिगणाधिपतिः । पूजामन्त्रः शालिहोत्रे　२०
" नमो देवाधिदेवाय तुरङ्गबलधारिणे । सूर्यपुत्राय देवाय तुरङ्गसहिताय च ॥
" तरङ्गपरिषद्यस्य तुगजा परिधावति । साश्वमश्वाधिप रक्ष सतूण त्वा प्रणाम्यहम् ॥
" मन्त्रेणानेन रेवन्त पाद्याद्यैरर्चयेत्सुधीः " ।
दशम्यां प्रातः पूजां विधाय विसर्जयेत् " सपूज्य प्रेषणं कुर्याद्दशम्यां शाबरोत्सवैः " ।
इति भविष्यपुराणे " ततः सप्रेषिता देवी दशम्यां शाबरोत्सवैः " इति कालिकापुराणाच्च ।　२५
एवं पूजां विधाय प्रणम्य
" दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम् । सर्वलोकप्रणेत्रीं च प्रणमामि सदा शिवाम् ॥
" मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम् । विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम् ॥
" सर्वदेवमयीं देवीं सर्वरोगभयापहाम् । ब्रह्मेशविष्णुनमितां प्रणमामि सदा उमाम् ॥
" विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थाननिवासिनीम् । योगिनीं योगमातां च चण्डिकां प्रणमाम्यहम् ॥　३०
" ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम् । प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम् ॥
" य इदं पठति स्तोत्रं शृणुयाद्वाऽपि यो नरः । स मुक्तः सर्वपापेभ्यो दुर्गया सह मोदते " ॥
इत्यादिभिः स्तोत्रैः स्तुत्वा बद्धाञ्जलिर्महिषघ्नीत्यादिश्लोकचतुष्टयेन प्रार्थ्य

१ प-श्रीदत्त । २ रटपधरवफ-विशेषिते । ३ खझ-न्द्र । ४ पक्ष-काल । ५ क-र्पिर्मिश्र पायसेन । ६ रटयपफखब-देवन । ७ बफ-धारिणे ।

" विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् । पूर्णं भवतु तत्सर्वं त्वत्प्रसादान्महेश्वरि " ॥
इति प्रसाद्य ' क्षमस्व ' इत्युक्त्वा एकपुष्पम् ' ॐ दुर्गायै नमः ' इत्यैशान्यां निक्षिपन्विसृज्य
" उत्तिष्ठ देवि चण्डेशि शुभां पूजां प्रगृह्य च । कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ॥
" गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके । व्रज स्रोतोजले वृद्ध्यै तिष्ठ गेहे च भूतये"॥

५ इत्युत्थाप्य गीतवाद्यब्रह्मघोषपुरस्सरं स्रोतोजलसमीपं नीत्वा
" दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिते । संवत्सरे व्यतीते तु पुनरागमनाय वै ॥
" इमां पूजां मया देवि यथाशक्त्या निवेदिताम् । रक्षणार्थं समादाय व्रज स्वस्थानमुत्तमम् " ॥
इति प्रवाहयेत् । ततो देवीपूजास्थाने शान्तिकलशोदकेन ब्राह्मणैरभिषिक्तस्तेभ्यो दक्षिणां[1] दत्वा ब्राह्मणान् भोजयित्वा बन्धुभिः सार्द्धं भुञ्जीत ।

१० अथ लोहाभिसारिकं कर्म । भविष्योत्तरे
" जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात् । लोहाभिसारिकं कर्म कारयेद्यावदष्टमीम् ॥
" प्रागुदक्प्रवणे देशे पताकाभिरलङ्कृतम् । मण्डपं कारयेद्दिव्यं नवसप्तकर[2] शुभम् ॥
" आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं सुशोभनम् । मेखलात्रयसंयुक्तं योन्याऽश्वत्थदलाभया ॥
" राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च । आनीय मण्डपे तानि सर्वाण्येवाधिवासयेत् ॥
१५ " ततस्तु ब्राह्मणः स्नातः शुक्लाम्बरधरः शुचिः । ॐकारपूर्वकैर्मन्त्रैस्तच्चिह्नैर्जुहुयाद्घृतम् ॥
" शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम् । हुतशेषं तुरङ्गाणां गजानामुपहारयेत् ॥
' बद्धप्रतिसरान्पश्च गजाश्वान्समलङ्कृतान् । भ्रामयेन्नगरे नित्यं नन्दिघोषपुरःसरान्[3] ॥
" प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः । पूजयेद्राजचिह्नानि फलमाल्यविलेपनैः ॥
" हुतशेषं प्रदातव्यमौपनायनिकेऽनले । लोहनामाऽभवत्पूर्वमसुरः सुमहाबलः ॥
२० " स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः[4] । तदङ्गसंभवं सर्वं लोहं यद्दृश्यते क्षितौ ॥
" तस्याभिहरणाद्राज्ञो विजयः समुदाहृतः " ॥ इति ।
पूजामन्त्राश्च तत्रैव
" यथाऽम्बुदश्छादयति शिवायेमां वसुन्धराम् । तथा छादय राजानं विजयारोग्यवृद्धये " ॥ छत्रस्य
" शशाङ्ककरसङ्काश क्षीरडिण्डीरपाण्डुर । प्रोत्सारयाशु दुरितं चामरामरभूषण " ॥ चामरस्य
२५ " शक्रकेतो महावीर्य सुपर्णस्त्वय्युपाश्रितः । पतत्रिराड्वैनतेयस्तथा नारायणध्वजः ॥
" काश्यपेयोऽमृताहर्ता नागारिर्विष्णुवाहनः । अप्रमेयो दुराधर्षो रणे देवारिसूदनः ॥
" गरुत्मान्मारुतगतिस्त्वयि सन्निहितः स्थितः[5]शस्त्रवर्मायुधान्योधान् रक्ष त्वं च रिपून्दह"॥ ध्वजस्य
" हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः । नागकिन्नरगन्धर्वा यक्षभूतगणा ग्रहाः ॥
" प्रमथाश्च सहाऽऽदित्यैर्भूतेशा मातृभिः सह । शक्रसेनापतिः स्कन्दो वरुणश्चाश्रितास्त्वयि ॥
३० " प्रदहन्तु रिपून्सर्वान् राजा विजयमृच्छतु । यानि प्रयुक्तान्यरिभिर्दूषणानि समंततः ॥
" एतानि सर्वशत्रूणां हतानि[7] तव तेजसा । कालनेमिवधे यद्वद्यद्वत्त्रिपुरघातने ॥

---

१ ङक्षप-गोविन्दार्णवे । २ चफ-परम्, अकटयखक्षपघ-षम् । ३ फचअघक्षघ-जने; प-गजे; टयक-निकेतने । ४ क-स्दलकृस य-धाराफदलीकृतः । ५ पक्ष-स्थिति । ६ कफ-महा । ७ ञ-हंतानि, झ-हतानि; ।

" हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा । शोभिताऽसि तथैवाद्य शोभस्व समयं स्मर ॥
" नीलाम्बरामिमां दृष्ट्वा नश्यन्त्वाशु ममारयः " । इति पताकायाः ॥
" दुन्दुभे[ त्वं सपत्नानां घोषाद्धृदयकम्पनः । भव भूमिपसैन्यानां तथा त्वं जयवर्द्धनः ॥
" यथा जीमूतघोषेण प्रहृष्यन्ति सुबर्हिणः । तथाऽस्तु तव शब्देन हर्षोऽस्माकं जयावहः"॥ दुन्दुभेः
"पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम् । विष्णुना त्वं धृतो नित्यमतः शान्तिं प्रयच्छ मे"॥ शङ्खस्य　५
" महेन्द्रनिर्मिते दिव्ये देवराजादिसेविते । शिबिके पाहि मां नित्यं सदा त्वं सन्निधौ भव " ॥

शिबिकान्दोलिकयोः

" विजयो जयदो जेता रिपुघाती शुभंकरः । दुःखहा धर्मदः शान्तः सर्वारिष्टविनाशनः ॥
" एते वै सन्निधौ यस्मात्तव सिंहा महाबलाः । तेन सिंहासनेति त्वं वेदैर्मन्त्रैश्च गीयसे ॥
" त्वयि स्थितः शिवः साक्षात्त्वयि शक्रः सुरेश्वरः । त्वयि स्थितो हरिर्देवस्त्वदर्थं तप्यते तपः ॥　१०
" नमस्ते सर्वतोभद्र भद्रदो भव भूपते । त्रैलोक्यं जय सर्वत्र सिंहासन नमोऽस्तु ते"॥ सिंहासनस्य
" गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः । ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥
" तेजसा चैव सूर्यस्य मुनीनां तपसा तथा । रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ॥
" प्रभावाच्च हुताशस्य वर्द्धस्व त्वं तुरङ्गम । स्मर त्वं राजपुत्रोऽसि कौस्तुभं च मणिं स्मर ॥
" सुरासुरैर्मथ्यमानक्षीरोदादमृताविभिः । जात उच्चैःश्रवाः पूर्वं तेन जातोऽसि तत्स्मर ॥　१५
" यां गतिं ब्रह्महा गच्छेन्मातृहा पितृहा तथा । भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥
" सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् । व्रजाश्च तां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥
" विकृतिं यदि गच्छेथा युद्धाध्वनि तुरङ्गम । रिपून्विजित्य समरे सह भर्त्रा सुखी भव"॥ अश्वस्य
" कुमुदैरावणः पद्मः पुष्पदन्तोऽथ वामनः । सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ॥
" तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः । मन्दो भद्रो गजश्चैव राजसङ्कीर्ण एव च ॥　२०
" वने वने प्रसूतास्ते यूथानि सुमहान्ति च । पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ॥
" भर्त्तारं रक्ष नागेन्द्र स्वामी च प्रतिपाल्यताम् । अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज"॥गजस्य
" प्रोत्सारणाय दुष्टानां साधुसंग्रहणाय च । ब्रह्मणा निर्मितश्चासि व्यवहारस्य सिद्धये ॥
" यशो देहि सुखं देहि जयदो भव भूपतेः । ताडयाशु रिपून्सर्वान् हेमदण्ड नमोऽस्तु ते " ॥

कनकदण्डस्य　२५

" सर्वायुधानां प्रथमं निर्मिताऽसि पिनाकिना । शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम् ॥
" चण्डिकायै प्रदत्ताऽसि सर्वदुष्टनिबर्हिणि । तयैव विस्तारिता चासि देवानां प्रतिपादिता ॥
" सर्वसत्वाङ्गभूताऽसि सर्वाशुभनिबर्हिणी । क्षुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते " ॥

छुरिकायाः

" रक्षाङ्गानि गजान्रक्ष रक्ष वाजिधनानि च । मम देहं सदा रक्ष कट्टारक नमोऽस्तु ते " ॥　३०

कट्टारकस्य

---

१ क–युधे । २ अपवफघड–कंपन, क्षक–कंपनं । ३ पक्ष–तव भूमिप सैन्यानां मंगलानां च मंगलम् । ४ वकधटयघ–चाब्देन । ५ वअघफकटयनड–हृष्यन्ते परवा णाः । ६ न–कः । ७ पक्ष–साक्षी । ८ ज्ञ–तदा । ९ पक्ष–संस्मर । १० कखघटयफ–वाञ्छिता । ११ खघवघ–शुद्धे । १२ खघ–वो; न–वौ । १३ टयक–तथा । १४ अकफमपक्षखघड–सर्वदुष्टनि । १५ व–र्द्धे ।

